# संस्कृतनिपुणता
# Level-02

Janaseva Trust Premises, Magadi Main Road,
Channenahalli, Bengaluru- 562130
Ph- +91 8431668084 , info@vvss.res.in www.vvss.res.in

मुर्छा मोहसमुच्छ्राययोः – मूर्तः मूर्तवान्

# सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः || १-१-५७
# शबर्या पूजितः सम्यग्रामो दशरथात्मजः |

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  सः महातेजाः शत्रुसूदनः शबरीम् अभ्यगच्छत् । दशरथात्मजः रामः शबर्या सम्यक् पूजितः ।
- अन्वयार्थः

  सः महावीर्यवान् शत्रुहन्ता रामः शबरीं गतवान् । तया रामः सम्यक् अर्चितः ।

# सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः || १-१-५७
# शबर्या पूजितः सम्यग्रामो दशरथात्मजः |

- पदपरिचयः
  - सः – तद् - द्- सर्व- पुं- प्रथमा- एकवचनम् ।
  - अभ्यगच्छत् – अभि + गच्छ – कर्तरि- लङ् – प्रथमपुरुष- एकवचनम् ।
  - महातेजाः – महातेजस् – स -पुं – प्रथमाविभक्ति-एकवचनम्- समस्तम् ।
  - शबरीम् – ई- स्त्री- द्वितीया- एकवचनम् ।
  - शत्रुसूदनः – अ- पुं – प्रतम – एकवचनम् - समस्तम् ।
  - शबर्या – ई- स्त्री- तृतीया- एकवचनम् ।
  - पूजितः – अ- पुं – प्रतम – एकवचनम् ।
  - सम्यक् – अव्ययम् ।
  - रामः – अ- पुं – प्रतम – एकवचनम् ।
  - दशरथात्मजः – अ- पुं – प्रतम – एकवचनम् - समस्तम् ।

# पम्पातीरे हनुमता सङ्गतो वानरेण ह || १-१-५८
# हनुमद्वचनाच्चैव सुग्रीवेण समागतः |

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  पम्पातीरे वानरेण हनुमता सङ्गतः हनुमद्वचनात् च एव सुग्रीवेण समागतः ।
- अन्वयार्थः

  रामः पम्पानामके सरोवरतटे हनुमता सह मिलितवान् । हनुमतः कथनाद् एव सुग्रीवनाम्ना वानरराजेन अपि सङ्गतः ।

# पम्पातीरे हनुमता सङ्गतो वानरेण ह || १-१-५८
# हनुमद्वचनाच्चैव सुग्रीवेण समागतः |

- पदपरिचयः
  - पम्पातीरे – अ – नपुं – सप्तमी- एकवचनम् - समस्तम्।
  - हनुमता – हनुमत् – त् – पुं – तृतीया- एकवचनम्।
  - सङ्गतः – अ- पुं- प्रथमा- एकवचनम्।
  - वानरेण – अ- पुं- तृतीया - एकवचनम्।
  - ह – अव्ययम्।
  - हनुमद्वचनात् – अ- नपुं- पञ्चमी- एकवचनम् - समस्तम्।
  - च – अव्ययम्।
  - एव – अव्ययम्।
  - सुग्रीवेण – अ- पुं- तृतीया - एकवचनम्।
  - समागतः – अ- पुं- प्रथमा- एकवचनम्।

# सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः || १-१-५९
# आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः |

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  महाबलः रामः सुग्रीवाय आदितः तत् सर्वम् अशंसत् । विशेषतः सीतायाः याथावृत्तम् अशंसत् ।
- अन्वयार्थः

महाशक्तिसम्पन्नः श्रीरामः आरम्भतः वृत्तं सुग्रीवाय श्रावितवान् तत्रापि विशेषतः सीतायाः अपहरणवृत्तं यथाघटितम् अगादीत् ।

# सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः || १-१-५९
# आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः |

- पदपरिचयः
  - सुग्रीवाय – अ – पुं – चतुर्थी- एकवचनम् ।
  - च – अव्ययम् ।
  - तत् – तद् – द – नपुं – द्वितीया - एकवचनम् ।
  - सर्वम् – अ- नपुं- सर्व - द्वितीया - एकवचनम् ।
  - शंसत् – शंस् – कर्तरि- लङ् – प्रथमपुरुषः - एकवचनम् ।
  - रामः – अ- पुं- प्रथमा- एकवचनम् ।
  - महाबलः – अ- पुं- प्रथमा- एकवचनम् - समस्तम् ।
  - आदितः – अव्ययम् ।
  - यथावृत्तम् – अव्ययम् ।
  - सीतायाः – आ- स्त्री- षष्ठी- एकवचनम् ।
  - च – अव्ययम् ।
  - विशेषतः – अव्ययम् ।

# सुग्रीवश्चापि तत् सर्वं श्रुत्वा रामस्य वानरः || १-१-६०
# चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् |

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  वानरः सुग्रीवः च रामस्य तत् सर्वं श्रुत्वा प्रीतः च रामेण अग्निसाक्षिकं सख्यं चकार ।
- अन्वयार्थः

राघवस्य सर्वम् इतिवृत्तम् आकर्ण्य ( समानदुःखपीडितौ एव आवाम् इति विचिन्त्य तेन सह मैत्रीं हितकरीं ज्ञात्वा ) प्रमुदितः सन् अग्नि साक्षिणं विधाय रामेण सह मैत्रीम् अकरोत् ।

# सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः || १-१-६०
# चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् |

- पदपरिचयः
  - सुग्रीवः – अ – पुं – प्रथमा- एकवचनम् ।
  - अपि – अव्ययम् ।
  - तत् – तद् – द – नपुं – द्वितीया - एकवचनम् ।
  - सर्वम् – अ- नपुँ- सर्व - द्वितीया - एकवचनम् ।
  - श्रुत्वा – क्त्वान्तम् अव्ययम् ।
  - रामस्य – अ – पुं – षष्ठी - एकवचनम् ।
  - वानरः – अ – पुं – प्रथमा- एकवचनम् ।
  - चकार – कृ – लिट् – प्रथमपुरुष – एकवचनम् ।
  - सख्यम् – अ- नपुँ - द्वितीया - एकवचनम् ।
  - रामेण – अ- पुँ- तृतीया- एकवचनम् ।
  - प्रीतः - अ- पुँ- प्रथमा – एकवचनम् ।
  - च, एव – अव्ययम् ।
  - अग्निसाक्षिकम् - अ- नपुँ - द्वितीया – एकवचनम् – समस्तम् ।

ततो वानरराजेन वैरानुकथनं प्रति || १-१-६१
रामायावेदितं सर्वं प्रणयाद्दुःखितेन च |
प्रतिज्ञातं च रामेण तदा वालिवधं प्रति || १-१-६२

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

ततः दुःखितेन वानरराजेन वैरानुकथनं प्रति रामाय सर्वं प्रणयात् आवेदितम् । तदा च रामेण वालिवधं प्रति प्रतिज्ञातम् ।

- अन्वयार्थः

रामेण सुग्रीवः वालिना सह वैरविषये पृष्टः । स्नेहवशात् सः रामाय सर्वं वैरवृत्तान्तं न्यवेदयत् । अन्याययुतं वालिनः आचरणं ज्ञात्वा रामः तस्य वधं प्रति प्रतिज्ञां कृतवान् ।

# ततो वानरराजेन वैरानुकथनं प्रति || १-१-६१
# रामायावेदितं सर्वं प्रणयाद्दुःखितेन च |
# प्रतिज्ञातं च रामेण तदा वालिवधं प्रति || १-१-६२

- पदपरिचयः
  - ततः – तद्धितान्तम् अव्ययम्।
  - वानरराजेन – अ- पुं- तृतीया- एकवचनम् - समस्तम्।
  - वैरानुकथनम् – अ- नपुं - द्वितीया – एकवचनम् - समस्तम्।
  - प्रति – अव्ययम् ।
  - रामाय - अ- पुं- चतुर्थी - एकवचनम् ।
  - आवेदितम् - अ- नपुँ- प्रथमा – एकवचनम् ।
  - सर्वम् – अ- नपुं- सर्व - प्रथमा - एकवचनम्।
  - प्रणयात् – अ- पुं- पञ्चमी - एकवचनम् ।
  - दुःखितेन – अ- पुं- तृतीया- एकवचनम् ।
  - च – अव्ययम् ।
  - प्रतिज्ञातम् – अ- नपुं- प्रथमा – एकवचनम् ।
  - च – अव्ययम् ।
  - रामेण – अ- पुं- तृतीया- एकवचनम्।
  - तदा - तद्धितान्तम् अव्ययम् ।
  - वालिवधम् – अ- पुं - द्वितीया – एकवचनम् – समस्तम् ।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

# वालिनश्च बलं तत्र कथयामास वानरः ।
# सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ १-१-६३

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

वानरः सुग्रीवः राघवे वीर्येण नित्यं शङ्कितः आसीत् । (सः) तत्र वालिनः बलं च कथयामास ।

- अन्वयार्थः

सुग्रीवः वालिनः बलं सम्यक् जानाति स्म । वाली अतुलितबलेन युक्तः जगतः महतः बलशालिनः पराजयं प्रापयितुं समर्थः आसीत् । रामः यदा सुग्रीवेण सह अमिलत् तदा सुग्रीवस्य महान् सन्तोषः अभवत् । परं सः निरन्तरं शङ्कायुक्तः तिष्ठति स्म यत् रामस्य शक्तिः वालिनः समक्षं स्थास्यति न वा । स्वलक्ष्यस्य प्राप्ति भृशं समीहमानः सन् एव सुग्रीवः पराजयभयात् रामे बलेन शङ्कितः आसीत् । अतः सः रामं वालिनः बलम् अवदत् ।

# वालिनश्च बलं तत्र कथयामास वानरः |
# सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे || १-१-६३

- पदपरिचयः
  - वालिनः – न् – वालिन् – पुं – षष्ठी - एकवचनम्।
  - बमल् – अ- नपुँ- द्वितीया- एकवचनम् ।
  - तत्र – तद्धितान्तम् अव्ययम्।
  - कथयामास – कथ् – कर्तरि – लिट् – प्रथपुरुष – एकवचनम् ।
  - वानरः - अ- पुँ- प्रथमा - एकवचनम् ।
  - सुग्रीवः - अ- पुँ- प्रथमा – एकवचनम् ।
  - शङ्कितः – अ- पुँ- प्रथमा - एकवचनम्।
  - च – अव्ययम् ।
  - आसीत् – अस्- कर्तरि – लङ् – प्रथमपुरुष - एकवचनम् ।
  - नित्यम् – अ- नपुँ- द्वितीया- एकवचनम् ।
  - वीर्येण – अ- नपुँ- तृतीया– एकवचनम् ।
  - राघवे - अ- पुँ- सप्तमी - एकवचनम् ।

# राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् |
# दर्शयामास सुग्रीवो महापर्वतसन्निभम् || १-१-६४

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  सुग्रीवः राघवप्रत्ययार्थं तु महापर्वतसन्निभं दुन्दुभेः उत्तमं कायं दर्शयामास ।
- अन्वयार्थः

वाली महाबली आसीत् । सुग्रीवः सततं रामस्य बलं शङ्कया पश्यति स्म । सः रामं वालिनः बलस्य महिमानं ज्ञापयितुं दुन्दुभिनामकस्य राक्षसस्य विशालकायम् अदर्शयत् । दुन्दुभेः शरीरं महापर्वतसदृशं दृश्यते स्म । एतादृशं बलवन्तं दुन्दुभिम् अपि वाली भूमिसात् कृत्वा दूरं क्षिप्तवान् ।

# राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् |
# दर्शयामास सुग्रीवो महापर्वतसन्निभम् || १-१-६४

- पदपरिचयः
  - राघवप्रत्ययार्थं – अ- नपुं- द्वितीया- एकवचनम् – समस्तम् ।
  - तु – अव्ययम् ।
  - दुन्दुभेः – इ- पुं – षष्ठी - एकवचनम् ।
  - कायम् – अ- पुं- द्वितीया- एकवचनम् ।
  - उत्तमम् - अ- पुं- द्वितीया- एकवचनम् ।
  - दर्शयामास – दृश् – कर्तरि – लिट् – प्रथमपुरुषः– एकवचनम् ।
  - सुग्रीवः - अ- पुं- प्रथमा – एकवचनम् ।
  - महापर्वतसन्निभम् – अ- पुं- द्वितीया – एकवचनम् – समस्तम् ।

# उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः |
# पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् || १-१-६५

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  महाबाहुः महाबलः (रामः) अस्थि प्रेक्ष्य उत्स्मयित्वा च पादाङ्गुष्ठेन सम्पूर्णं दशयोजनं चिक्षेप ।
- अन्वयार्थः

  महाशक्तिः राघवः दुन्दुभेः अस्थि समूहं दृष्ट्वा विहस्य च पादस्य अङ्गुष्ठेन दशयोजनं यावत् आक्षिपत् ।

Veda Vijnana Shodha Samsthanam

Centre for Śāstra and Contemporary Studies

# उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः |
# पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् || १-१-६५

- पदपरिचयः
  - उत्स्मयित्वा – क्त्वान्तम् अव्ययम् ।
  - महाबाहुः – अ- पुं- प्रथमा- एकवचनम् - समस्तम् ।
  - प्रेक्ष्य – ल्यबन्तम् अव्ययम् ।
  - च – अव्ययम् ।
  - अस्थि - न्- नपुं- द्वितीया- एकवचनम् ।
  - महाबलः – अ- पुं- प्रथमा- एकवचनम् ।
  - पादाङ्गुष्ठेन – अ- पुं- तृतीया – एकवचनम्- समस्तम् ।
  - चिक्षेप – क्षिप् – कर्तरि – लिट् – प्रथमपुरुष – एकवचनम्
  - सम्पूर्णम् - अ- नपुं- द्वितीया - एकवचनम् ।
  - दशयोजनम् - अ- नपुं- द्वितीया - एकवचनम् - समस्तम् ।